योगः कर्मसु कौशलम्

AHNIK VARTA PATRAM
Email - ahnikvartapatram@gmail.com

# आह्निक वार्ता पत्रम्

RNI No. : UPSAN/2018/76680

वर्ष-3 अंक 267 संस्कृत दैनिक/ प्रात; संस्करण | प्रयागराज 22 जुलाई 2021 गुरुवार | पृष्ठ-4 | मूल्य- 2 रुपये

## माननीयो रक्षामन्त्री श्रीराजनाथ महोदयः राजधानीं लखनऊ-नगरमागत्य माननीयं श्रीलालजी टण्डन महोदयं स्मरितवान्





**लखनऊ।** देशस्य माननीय रक्षामन्त्री श्री राजनाथ सिंह महोदयः स्व- एकदिवसीयात्रायां सर्वप्रथमः लखनऊ-नगरस्य पूर्व सांसदस्य श्रीलाल जी टण्डन महाभागस्य प्रतिमाया अनावरणं कृतवान्। अस्मिन्मध्ये माननीय पूर्व प्रधानमन्त्रि- अटल बिहारी बाजपेयी महाभाग- सुश्री मयावती महोदया-पूर्व मुख्यमन्त्रि- कल्याण सिंहादीनाञ्च संदर्भे रोचकत्रयं कथनाक मुक्तवान्।

### सुभाषितम्

प्रदोषे दीपक : चन्द्रः,
प्रभाते दीपकःरविः।
त्रैलोक्ये दीपकःधर्मः,
सुपुत्रः कुलदीपकः॥

अर्थ – संध्या काल में चन्द्रमा दीपक है, प्रभात काल में सूर्य दीपक है, तीनों लोकों में धर्म दीपक है और सुपुत्र कूल का दीपक है।

### संक्षिप्तवार्ताः

#### पंजाबे न अभवत् कांग्रेसस्य संकटम् न्यूनम्




**नवदेहली।** पंजाबे न अभवत् कांग्रेसस्य संकटम् न्यूनम्। सिद्धू महाभागेन क्षमायाचनायै अडिगः मुख्यमंत्री अमरिंदर सिंह अग्रिम वर्षे भव्यमाणे विधानसभा निर्वाचनेन कांग्रेसस्य कठिनता वृद्धिंगता भवति। पंजाब कांग्रेसस्य नव प्रदेशाध्यक्षः नवजोत सिंह सिद्धू, मुख्यमंत्री च कैप्टन अमरिन्दर सिंहस्य मध्ये कलहोपरि समाप्तो न भवति। मंगलवासरे कैप्टन अमरिन्दर सिंहस्य मीडिया सलाहकारः तासां वार्तानां खण्डनं अकरोत्, यस्यां नवजोत सिंह सिद्धू इत्यस्य कैप्टन अमरिन्दर सिंहेन मेलनाय समय ग्रहणस्य वार्ता समक्षे समागता। इदानीं यदा कैप्टनः दृढ़ भावः अधारयत् तदा पंजाबे कांग्रेसस्य संकटं अपि च संवर्धमानः दृश्यते।

## अमेजन अध्यक्षः जेफ् बेजोस् अपि बाह्याकाश पर्यटने भागं भजति

**नवदेहली।** बाह्याकाशपर्यटनम् आलक्ष्य यात्रा न समाप्यते। शतकोटीश्वरः ब्रान्सण् महोदयः बाह्याकाशं गत्वा प्रत्यागमनानन्तरं आमसोण् अध्यक्षः जेफ् बेसोस् अपि बाह्याकाशपर्यटने भागं भजति। स्वस्य ब्लू ओरिजिन् नाम संघस्य आकाशबाणे सः अद्य बाह्याकाशपर्यटनं करिष्यति। चन्द्रे मनुष्यस्य प्रथमपदक्षेपस्य 52 तमे वार्षिके एव जेफ् बेसोसः संघः च बाह्याकाशपर्यटनं करोति इति विशेषता च यात्रायाः अस्ति।1969 तमे वर्षे जूलाय् मासस्य विंशतितमदिने एव मानवः प्रथमतया चन्द्रे पदक्षेपः कृतः। बाह्याकाश-पर्यटनसाध्यताः संवर्धनीयाः इत्येतदेव यात्रायाः लक्ष्यः। यूरि गगारिनः एव प्रथमतया बाह्याकाशं प्राप्तवान्। इदानीन्तनानि पर्यटनानि केवलं प्रतियोगितायै न। किन्तु भाविनि परम्परायाः बाह्याकाशयात्रां सुकरं कर्तुमेव इति जेफ् बेसोसेन प्रोक्तम्।



श्वः अर्थात् गुरुवासरतः 6 विकास क्षेत्रेषु ( ब्लाक ) प्रारम्भो भविष्यति कल्सटरड्राइव, तत्काले स्थाने एव पंजीकरणं प्रतिरोधनं च भविष्यति।

## क्रीडाक्षेत्रमिव बृहदाकारवान् छिन्नग्रहः जूलाय् मासे 24 तमे दिनाङ्के भूसमीपेन गमिष्यति इति नासा संस्था




**नवदेहली।** 2008 जि ओ 20 नाम छिन्नग्रहः जूलाय् मासस्य चतुर्विंशतितमे दिनाङ्के भूसमीपेन गमिष्यति इति अमेरिक्कादेशस्य नासा संस्थया आवेदितम्। एतस्य छिन्नग्रहस्य एकस्य क्रीडाक्षेत्रस्य वा अथवा ताज्महलस्य त्रिगुणीकृतमितः वा तुल्यः बृहदाकारः भवति। होरायां 18000 किलोमीट्टरवेगेन एषः भूसमीपमागच्छति इति नासा संस्थया आवेदितम्। अप्पोलो क्लास् विभागे अन्तर्गतं भवति छिन्नग्रहोऽयम्। अस्य सञ्चारपथमधिकृत्य आशङ्रयाः आवश्यकता नास्ति इति नासा संस्थया आवेदितम्। भूमेः अतिनिकटम् आगमिष्यति तथापि 0.04 आस्ट्रोणमिक् एककं (3,718.232 मैल्) दूरे एव छिन्नग्रहः भविष्यति। भूमेः 2,38,606 मैल् परिमिते दूरे एव चन्द्रस्य स्थानम्।





उल्लास पूर्ण वातावरणे अकीदत ( श्रद्धया ) इत्यनेन सहमन्यतेस्म पर्व ईद उल अजहा। मस्जिदेसु नमाज पठितुं जनसम्मर्दः उन्मत्तः, गृहेदत्तम् बलिदानं।

छायाकार: सौरभ कुमार

## सम्पादकीयम्

### विपक्षिदलानां आक्रामकता मात्रं कोलाहल पर्यन्तं एव सीमितं न भवेत्

संसदः मानसून सत्रस्य समारम्भः अभवत् अस्मिन् सत्र कालेस्थितयः परिवर्तिताः संसद सत्रे प्रभावकारी घटनेसंघटितेस्म। एकादेशः कोरोनायाः द्वितीयः भयावहः तरंगस्य समक्षत्वं अकरोत्। द्वितीयः पश्चिम बंगालस्य निर्वाचने भाजपा दलस्य पराजयः चिन्ताजनका।कोरोनायाः द्वितीय तरंगस्य अशोभन प्रबन्धनेन यत्र सर्वकारस्य छविं आघातम् अभवत् तत्रैव बंगाल निर्वाचने विजयेन विपक्षि दलानां समुत्साहो सर्वर्धितः। सम्भाव्यते यत् सम्प्रति संसदि विपक्षः अधिकं आक्रामकः भविष्यति। लोकसभायां भाजपा दलस्य बहुमतः वर्तते राज्य सभायामपि सुदृढ़ता अस्ति। एतादृशे अवस्थिते दृश्यतेस्म यत् संसदि विपक्षस्तु न अपितु सत्ता पक्षमेव विपक्षेस बलः भवति। परंच प्रश्नोऽयम् यत् अस्मिन् सत्रेऽपिकिम् इयमेव स्थितिः भविष्यति। यद्यपि विपक्षस्य आक्रमणेन संरक्षायै उत्तरदायी प्रक्रियायै च सर्वकारस्य सज्जताऽपि न अल्पीयसी। अतएव सत्रात् पूर्वं रक्षामंत्री राजनाथ सिंह राज्यसभायां सदनस्य नेता पीयूष गोयलः विपक्षस्य महत्वपूर्णैः नेतृभिः मेलनं कृत्वा सौहार्द पूर्णंवातावरणं निर्मातुं सत्रस्य च सुचारू रूपेण संचालनाय उपक्रमं अकुरूताम्। सत्रात् पूर्वंसम्पद्य माना संगोष्ठी अपि अस्यैव उपक्रमस्य एकांशः अस्ति। विचारणीयमिदं यत् विपक्षः आक्रामकं भूत्वा भवतुनाम स्व राजनीतिकं संवर्द्धनं निर्माणस्य प्रयत्नंकरोतु परंच एतत् विरूद्धे सः विधायी कार्येषु कथमपि अवरोधः कर्तुं न सक्षमो भविष्यति। लोकसभायां तुअस्याः सम्भावना एव न विद्यते यतः भाजपा पार्श्वे पर्याप्तं संख्याबल मस्ति। राज्यसभायां अपि स सुदृढ़ः महत्वपूर्णे सुविधेयकेसु समर्थनायतस्य पार्श्वेबीजद, वाईएस आर, टीआरएसस दृशानां दलानां सहयोगः सदैवप्राप्यते।

# ‘मदक्लिन्नकपोलानां द्विरदानां चतुष्शती’

क्षेमेन्द्रस्य औचित्यविचारचर्चायां काव्यस्य जीवितभूतत्वेन औचित्यं स्वीकृतम्। क्षेमेन्द्रस्य पूर्वे आलङ्कारिकैः औचित्यं न स्पष्टतया स्वीकृतम्। क्षेमेन्द्रस्य औचित्यसिद्धान्तस्य मूलं तावदानन्दवर्धनाचार्यस्य ‘अनौचित्यादृते नान्यद्रसभङ्गस्य कारणम्’ इति वचनम्। औचित्यं तु सार्वकालिकमेकं स्थिरं तत्त्वम्। औचित्यं विना काव्यस्य शोभा न जायते।

कूटशब्दाः - औचित्यम्, चमत्कारः, संघटना, उचितम्, वक्रता इत्यादयः संस्कृतालङ्कारशास्त्राम्बुधौ काव्यात्मतत्त्वचिन्तने प्रयतमाना आलङ्कारिकाः काव्यविच्छित्तिजनकानलङ्कारादीनङ्गीकुर्वन्ति। केचन रसं केचन वालङ्कारं केचन वा रीतिं केचन वा वक्रोक्तिं काव्यात्मरूपेण स्वीकुर्वन्ति; किन्तु व्यासदासापरपून्यनामा क्षेमेन्द्राचार्यो भिन्नरूपेणौचित्यं काव्यात्मतयाभिप्रैति।

विभिन्ने अलङ्कारग्रन्थे औचित्यस्य स्थितिः

अधुना मनसि प्रश्नः समुदेति यत्- अस्यौचित्यस्य धारणा क्षेमेन्द्रेण कुत्र प्राप्यते अथवेदमौचित्यं क्षेमेन्द्रस्य स्वशिरस्प्रसूतम् अथवेदमौचित्यं पूर्वे एव स्थितम्। अलङ्कारतत्त्वालोचनायामिदं स्पष्टी भविष्यति। वयं भरताचार्यस्य नाट्यशास्त्रानुसन्धानेन जानीमहे यत्- उचितस्थाने उचितप्रयोग एव सर्वथोचितः। भरतेन औचित्यप्रतिष्ठा न कृता, किन्तु नानाभावोपपन्नस्य नानावस्थान्तरात्मकस्य लोकवृत्तानुकरणभूतस्य नाटकस्य प्रमाणीभूते लोके भावाभिनय प्रकृति पाठ्य छन्दस्स्वर संगीतादिविषयेष्वनुकूलतां प्रतिकूलतां वौचित्यमनौचित्यं वा स स्वीकरोति। औचित्यमन्तरेण सर्वं हास्यतामुपजायते। तथा हि तेनोक्तम् - अदेशजो हि वेषस्तु न शोभां जनयिष्यति। मेखलोरसि बन्धे च हास्यैवोपजायते। भरतपर वर्ति भामहेनौचित्य शब्दो नोल्लिखितः किन्त्वौचित्यस्य धारणा तेन प्रदत्ता। तन्मते दोषः कदाचिददोषत्वेन प्रतिपाद्यते-

1. शब्दसन्निवेशविशेषात्। 2. आश्रयसौन्दर्याच्च।

यथा स्त्रक्षु नीलं पलाशं सौन्दर्यं जनयति। तथा शब्दसन्निवेशविशेषाद्दुरुक्तमपि शोभते। पुनश्च रमणीनयनयोर्यथाञ्जनं शोभां जनयति तथा आश्रयसौन्दर्यादपि शोभां धत्ते।4 यथा ‘अपाण्डुगण्डमेतत्ते वदनं वनजेक्षणे’- इत्युदाहरणे सन्निवेशविशेषात् गण्डपाण्डुशब्दयोः प्रयोगोऽदोषत्वेन प्रतिपादितः। पुनश्च ‘विक्लिन्नगण्डानां करिणां मदवारिभिः’ इति। ‘मदक्लिन्नकपोलानां द्विरदानां चतुष्शती’ इत्युदाहरणद्वये क्लिन्नगण्डशब्दयोः दोषत्वमाश्रयसौन्दर्याददोषत्वेन संस्थापितम्। भामहस्यात्र व्यक्ताभिप्रायस्तावत्कविना साधुशब्दाः प्रयोगी क्रियन्ते चेत् शब्दसन्निवेशविशेषादाश्रय-सौन्दर्ययाद्वा व्यवह्रियन्ते। अर्थादौचित्यवशाच्छब्दप्रयोगे दोषो नोपजायते। भामहेन विषयोऽयमुदाहरणेन दृढ़ीक्रियते- ग्राम्यं सुरभि कुसुमं त्याज्यम्; किन्तु स्त्रक्षूपयुक्त स्थान विन्यास विरचितत्वात् शोभां धत्ते तथा काव्येष्वपि। दण्डिनः काव्यादर्शे औचित्यशब्दो नेक्ष्यते। तन्मते कविकौशलात्कदाचिद्विरोधो दोषगणनामुत्क्रम्य गुणवीथीं विगाहते।6 दण्डिनः ‘कविकौशलात्’ इति पदेनौचित्यवत्पदप्रयोगोऽव्यक्ततयोल्लिखितः। नवमशताब्द्यां रुद्रटस्य काव्यालङ्कारे ध्वनितं यत्- रीतिषूपयुक्तस्थानेष्वौचित्यवशाद्रसप्रयोगः समुचितः।7 दशमशतकस्य भोजराजेनाप्यनुरूपतयानुसरति दण्डिनो वक्तव्यम्। भोजदेवस्य मते जात्यादीनां शब्दालङ्कारसंज्ञा।8 धारेश्वरभोजदेवेन चतुर्विंशतिप्रकारकाः शब्दालङ्कारजातयः स्वीकृताः। जातेः लक्षणप्रसङ्गे तेनोक्तम् - तत्र संस्कृत मित्यादिर्भारती जातिरिष्यते । सा त्वौचित्या दिभिर्वाचाम लङ्काराय जायते। तन्मते औचित्याकृष्ट एवालङ्कारः। पुनश्च तेन वाच्यविषयदेशसमयौचित्यः दर्शिताः। अनन्तरं गतेरलङ्कारत्वनिर्णयप्रसङ्गे तेन गदितम् - पद्यं गद्यं च मिश्रं च काव्यं यत्सा गतिः स्मृता। अर्थौचित्यादिभिः सापि वागलङ्कार ईष्यते।अर्थौचित्यः व्याख्यानप्रसङ्गे उच्यते कथाख्यायिकादौ गद्यमेव चम्पूप्रभृतौ मिश्रमेवेत्यादि पदोपात्तबन्धोचिती द्रष्टव्या इति। प्रयोगव्यवस्थाया उपपादनसमये भोजदेवेनोक्तम् - यथामति यथाशक्ति यथौचित्यं यथारुचि। कवेः पात्रस्य चैतस्याः प्रयोग उपपद्यते। अत्र मतिर्व्युत्पत्तिः। तत्र शक्तिव्युत्पत्ती कवेरेव। औचित्यं तु पात्रस्यैव। वाग्भटस्य काव्यानुशासने रसाविघातकेषु शब्ददोषेष्वनुचितार्थशब्ददोषः संलोचितः। पदे वाक्ये चानौचित्येन यत्प्रयुक्तं तदनुचितार्थम्। षोडश प्रकारकेष्वर्थ दोषेषु भिन्नसहचरत्व मुल्लेखनीयम्। तत्रोचित सहचारि भेदस्य कथोल्लिखिता। समालङ्कारस्य स्वरूपनिर्णयसमये औचित्यं समाहृतम्। पुनश्च स्त्रीणामष्टावस्थावर्णनाप्रसङ्गे वासकसज्जाया लक्षणं लक्षितम्- ‘उचिते वासके प्रगुणीकृतसर्वोपकरणा वासकसज्जा।’ आनन्द वर्धनेन तस्य ध्वन्यालोके अलङ्कारौचित्य-ध्वन्यौचित्य-वृत्तौचित्य-संघटनौचित्य-प्रबन्धौचित्य-रसौचित्यादिरूपेण औचित्यस्य विभिन्नाः स्थितयः वर्गीकृताः। ध्वन्यालोकस्य तृतीय उद्योते तेन संघटनायाः स्वरूपोद्भावने मनोनिवेशः कृतः। तत्र औचित्यस्य आवश्यकता दृश्यते। संघटना त्रिविधा-असमासा, मध्यमेन समासेन भूषिता, दीर्घसमासा च। किन्तु अस्याः संघटनाया आश्रयः कः नियामकः कः? कार्यं किम्? इत्येतद्विषये आनन्दवर्धनाचार्येण उक्तम् - गुणानाश्रित्य तिष्ठन्ती माधुर्यादीन् व्यनक्ति सा। रसान् तन्नियमे हेतुरौचित्यं वक्त्रिवाच्ययोः। माधुर्यादिगुणाः भवन्ति आश्रयाः, रसद्योतनं तस्य कार्यम्, वक्त्रिवाच्ययोः औचित्यं तन्नियामकत्वम्। वक्त्रिवाच्ययोः औचित्याभावात् काव्यस्य रसप्रतीतौ अभावो जायते। यथा करुणविप्रलम्भ-शृङ्गारयोस्त्वसमासा संघटना, किन्तु अत्र दीर्घमध्यमसमासानां प्रयोगे वक्तृवाच्योः औचित्याभावात् ध्वन्यात्मभूतरसाभावात् न तु काव्य मास्वाद्यते। पुनश्च रौद्ररसे मध्यमसमासस्य औचित्यम्। कथानायकः यदि धीरोद्धतो भवति तर्हि संघटना भवति दीर्घसमासा। धीरललिते च मध्यमसमासा। किन्तु अस्य नियमस्य अनौचित्यात् रसप्रतीतौ व्यवधायको भवति। वक्तृवाच्यगतौचित्ये सत्यपि संघटनायां विषयौचित्यस्य आवश्यकता वर्तते। विषयौचित्येनापि संघटना नियन्त्रिता भवन्ति। प्रबन्धवत् मुक्तकेष्वपि रसबन्धाभिनिवेशिनो भवन्ति कवयः। यथा - अमरुकवेर्मुक्तकाः शृङ्गाररसस्यन्दिनः प्रबन्धायमानाः प्रसिद्धा एव। स्यन्दानितकादिषु विकटनिबन्धनौचित्यान्मध्यसमासादीर्घसमासे एव रचने। पर्यायबन्धे पुनः असमासामध्यमसमासे एव संघटने। इतिवृत्तस्य केवलविन्यासत्वात् रसाभिनिवेशस्य नात्यन्तम्। अतः स्वेच्छाचारः। कुलकादिनिबन्धनस्य आधिक्यात् दीर्घसमासायां खण्डकथासकलकथयोर्न विरोधः। अत्र रसानुसारं वृत्तौचित्यमनुसर्त्तव्यम्। सर्गबन्धे रसतात्पर्यात् यथा रसौचित्यम्। अभिनेयार्थे रसबन्धेऽभिनिवेशः कार्य्यः। आख्यायिकायां गद्यस्य गाड़बन्धाश्रयेण शोभाजनकत्वात् तस्य च प्रकृष्यमाणत्वात् भूम्नि मध्यमसमासादीर्घसमासे एव संघटने। कथायां गाड़बन्धप्राचुर्येऽपि गद्यस्य रसबन्धोक्त मनुसर्तव्यम्। यथा गद्यबन्धे विप्रलम्भ शृङ्गारकरुण योराख्यायिकां दीर्घसमासा न शोभते। अतो गुणसंघटन योर्नियामकत्वं तावद्वक्तृवाच्यविषयौचित्यम्। एतदौचित्यत्रयं रसौचित्येन नियन्त्रितम्। रसबन्धोक्तमौचित्यं भाति सर्वत्र संश्रिता। रचना विषयापेक्षं तत्तु किञ्चित् विभेदवत्।। अस्याः कारिकायाः वृत्तावुक्तम्- ‘विषयापेक्षं त्वौचित्यं प्रमाणतोऽपकृष्यते प्रकृष्यते च।’ अर्थात् विषयमूलकमौचित्यं रसमपेक्षते। विषयमूलकमौचित्यं रसौचित्यानुसारं गृहीतमगृहीतं वा। यथा - आख्यायिकायां नात्यन्तमसमासा स्वविषयेऽपि नाटकादौ नातिदीर्घसमासा चेति संघटनायाः दिगनुसर्त्तव्या। ननु प्रबन्धस्य व्यञ्जकत्वम्। प्रबन्धारसादीनां व्यञ्जकः। तस्य व्यञ्जकत्वे ‘पूर्वं हि कथा परीक्षा। तत्राधिकावापः फलपर्यन्तानयनं रसं प्रति जागरणं तदुचितविभावादिवर्णनेऽलङ्कारौचित्यमिति।’ कथाशरीरस्य प्रकाश एव विधिः। तत्र विभावौचित्यं तवत्प्रसिद्धम्। भावौचित्यं तावत्प्रकृतौचित्याद् भवति उत्तममध्यमाधमभावात् दिव्यमानुषादि भावाच्च प्रकृतौचित्यं विविधप्रकारकं भवति। यथायथ प्रकृत्यनुसारि स्थायि भावोपनि बन्धन मौचित्यानुसारि। रसानुकूलविषयस्य योजनं कर्तव्यम् इतिवृत्तविषयो यदि रसानुसारि न भवति तर्हि तं परित्यज्य रसानुसारिणः कल्पितविषयस्य प्रयोग एव समुचितः। एतेन न दोषः। शास्त्रसमापनेच्छया न रसाभिव्यक्तये सन्धिसन्ध्यङ्गानां योजनं कर्तव्यम्। काव्यस्य प्रयोजनानुसारं कुत्रचिद्र सस्योद्दीपनप्रशमनयोरभिनिवेशः कर्तव्यः। अङ्गिरसाभिव्यक्तिं प्रति दृष्ट्यर्पणम्। कविः स्वशक्तिप्रदर्शनार्थं न रसादेर भिव्यक्तये औचित्यमूलकान् अलङ्कारादीन् योजयति।अतः प्रबन्धे प्रसिद्धानुसारमौचित्यबन्धस्य विन्यास एव रसस्य श्रेष्ठो निदर्शकः। तथा हि नाट्यशास्त्र आदिष्टं- ‘प्रख्यात वस्तुविषयत्वं नाटकस्यावश्यक कर्तव्यतयोपन्यस्तम्। तेन हि नायकौचित्यानौचित्यविषये कविर्न व्यामुह्यति।’

# शूद्रमुनिः बलरामदासः

मध्ययुगीय ओडिआ साहित्यस्य प्रख्यात साहित्यिकः पञ्चसखिषु ज्येष्ठो बलरामदासः अन्यतमः विलक्षणप्रतिभासंपन्नश्च बभूव । असौ महात्मा न केवलं ज्ञानिभक्तेषु सम्मानित अपितु महात्मना चैतन्येनापि अभिनन्दितः इति चैतन्यभागवते चैतन्यचरितामृते च प्रामाणिक.विषयः । श्रीजगन्नाथस्य अनन्यभक्तेषु बलरामः श्रेष्ठतमः ज्ञानीनामग्रगण्य आसीत् ।

यद्यपि अस्य महानुभावस्य जन्मविषये वंशानुचरित.विषये च किमपि विशेषतथ्यं न समुपलभ्यते तथापि असौ महापुरुषः 1472 1484 वा ख्रिष्टाब्द.मध्ये ;कोणार्कद्ध गोप अन्तर्गत श्एरबंगश् नामके स्थाने एकस्मिन् शुद्रपरिवारे उत्कलराज्ये जनिमलभत । तत्र अद्यापि तस्य स्मृतयः मिलन्ति । यथा बलरामस्य मन्दिरं विद्यते । एरबंगस्य अनतिदूरे श्बेगुनिआश् इति स्थाने तस्य समाधिपीठो वर्तते । कविः वैष्णव आसीत् मात्र न सन्न्यासीए वस्तुतः आदर्शी गृही एव । जगमोहन रामायणस्य अन्तिमे काण्डे कविना प्रोक्तम्.

**ष्भावग्राही प्रभु मोते दया कले ।**
**हृदयरे वसि मोते रामायणे कहिले ?**
**से प्रभु कवित्व अटइ एथिर ।**
**लोभे मोहर नाम भणाइलि ग्रन्थर ?**
**पण्डित जन शुणि न धर मो दोष ।**
**समुद्र पंहरिबाकु कलंइ साहस ?**
**नारायेण प्रसादे भवसिन्धु तरि ।**
**एहा जाणिण शरधा होइला मोहोरि ?**
**जन्मेण शूद्र मुंहि अलप वयेस ।**
**ग्रन्थ करिवा काले वयस वतिश ?**
**दारा सुत धन सुख भोग शिरी ।**
**अरोगी दातापण देइछन्ति हरि ?**
**ए मर्त्यलोके मुं जगन्नाथ सेविवि ।**
**इछा होइले पुण वैकुण्ठकु यिवि इति ।**

ईश्वरदासस्य चैतन्यभागवते सः याजपुर प्रदेशे चन्द्रपुरे अजायत इति लिखितमस्ति । किन्तु दाढ़्र्यताभक्ति रसामृत.पुस्तके सः सपरिवारं पुर्यां अवसत् इति ज्ञायते । अस्य पिता सोमनाथ महापात्रः माता च यमुनादेवी आस्ताम् । तस्य पिता प्रतापरुद्र देवस्य कर्मचारी आसीत् । अन्ते सोऽपि प्रतापरुद्र देवस्य राजभवने राजसेवां कृतवान् । चैतन्यदेवस्य सम्मेलनेन तेन राजसेवां विहाय वैष्णवधर्मं गृहीतवान् । एकदा सः जगन्नाथमन्दिरस्थित मुक्तिमण्डपसभायां वेदान्तशास्त्रे पण्डितगोष्ठीषु भागं गृहीतवान् । किन्तु तदानीन्तन पण्डिताः तं शूद्र इति मन्यमानाः अनादरं कृतवन्तः । अत्यधिक भावप्रवणता सकाशात् केचन तं मत्त बलराम इति कथयन्ति । तत्प्रोक्त भगवद्गीतायां तेन स्वपरिचयः इदृशः प्रदत्तः.

महापात्र सोमनाथ तनये ।
बलरामदास गीतारे कहे ? अपि च रामायण्स्य आदिकाण्डे तेन भणितम् ।सोमनाथ महापात्र कोले होइलि सम्भूत ।
एहुं पिता मोर विष्णुरे भकत
तेणु जगन्नाथ मोते दया कले ।
रामायण ग्रन्थ मो मुखे वखाणिले
महामन्त्रीवर सोमनाथ महापात्र ।
बलराम दास मुं ये ताहांकर पुत्र इति ।

बलरामदास एकाधारेण कविः साधकः भक्तश्च । प्रत्येकक्षेत्रे स अनन्यगुणसंपन्न आसीत् । भक्तिसाहित्यपरंपरासु ज्ञान.योग.भक्तीनामेकीकरणं तस्य अनवद्य.कृतिसु अन्यतमम् । उत्कलीय वैष्णव धर्मस्य पञ्चसाधकाः श्पञ्चसखाश् इति उत्कलभाषया परिचिताः सन्ति । बलराम.जगन्नाथ.अच्युतानन्द. यशोवन्त.अनन्तदासाः पञ्चसखायः भवन्ति । अच्युतानन्दस्य ष्शून्यसंहिताष्यां यशोवन्तस्य ष्चौराशी.आज्ञाष्यां च पञ्चसखीनां सम्यक् सूचना मिलति। किन्तु चैतन्य चरितामृते चैतन्य भागवते च एतेषां विषये न किमपि तथ्यं समुपलभ्यते । दिवाकरदासस्य जगन्नाथ चरितामृते बलरामदास विषये लिखितमास्ते । 15ध्09ध्1510 खीष्टाब्दे चैतन्येन सह बलरामस्य संयोगो विहितः । चैतन्यदेवः बलरामस्य प्रतिभया विमुग्धोऽभूदिति कतिपयेषु ग्रन्थेषु उपलभ्यते । कथ्यते बलरामो वेश्यासक्त आसीत् । यमुनानाम्नी कामपि वेश्यालयं सः प्रत्यहं गच्छति स्म । एकदा रथयात्राकाले सहसा वेश्यागृहादागत्य सः रथमुपरि आगतवान् । सेवकाः बलरामं वारितवन्तः । तदा बलरामः समुद्रतीरं गत्वा तत्र सिकताभिः रथं निर्माय रथयात्रां कृतवान् । अत्र बडदाण्डे रथः न चलितः । पश्चात् जगन्नाथस्य स्वप्नादेशेन राजा बलरामं क्षमां याचित्वा ससम्मानं तं पुनः रथं प्रति आनीतवान् । वस्तुतः यमुना न वेश्याऽऽसीत् । जगन्नाथस्य परमा साधिका आसीत् । जगन्नाथस्य निर्देशेन हि बलरामः प्रत्यहं यमुनागृहं गच्छित स्म ।

बलरामदासः सिद्धसाधकस्थथा प्रख्यातो हठयोगी आसीत् । पिण्ड.ब्रह्माण्डतत्त्वेषु तस्य साधना बलीयसी आसीत। प्रबुद्ध.बलरामस्य जगन्नाथे आसीत् अखण्ड विश्वासः । तन्मतानुसारं जगन्नाथः स्वयं वैकुण्ठवासी । पुरी एव नित्यधाम । कायासाधनया हि मोक्षप्राप्तिः चरमलक्ष्यम् । एतद् बलरामदासस्य मुख्य.दर्शनम् । ज्ञान.योग.भक्तीनां समीकरणार्थं हि बलरामस्य प्रयासोऽत्र सिद्धः । ।

बलरामदास आसीत् जातिस्मरः । सारलादासः गोरक्षनाथ इव तत्पूर्वजन्मवृतान्तः तेन बहुषु ग्रन्थेषु समुल्लिखितः। तथाहि रामायणस्य लंकाकाण्डे.

मुं बलरामदास रामायण अबतारे थिलि ।
दिहुडि धरिण मु समस्त देखिलि ?
मते आज्ञा देले मर्त्य पुरकु यिबु ।
कलियुगे शूद्रमुनि होइण जनमिबु ?
जन्महुं वर्णकथा सुमरिबु तुहि ।
श्रीजगन्नाथ प्रभु ये मोहर गोसांइ ?ष् इति ।

यदि वा बलरामः शूद्र आसीत् किन्तु न अधमः नापि पतितः नापि अज्ञानी एव । कवेः विनम्रता हि तस्य स्वभावं प्रमाणयति । तदुक्तिः अयोध्या काण्डे.

ष्मुंहि पामर ये विशेषे शूद्रयोनि ।
सुज्ञ जने कोप न करिबे एहा शुणि ?
नीलगिरि जगन्नाथ किछु दया कला ।
तेणु से ग्रन्थमो हृदरु स्फुरिला ?
बलराम दास मुं श्रीहरि सेबक ।
शुणि उपहास न कर दुष्ट लोक ?ष

तन्मतानुसारं मनुष्यः ब्राह्मणगृहे जाते सति न ब्राह्मणो भवितुं पारयतिए कर्म मनुष्यं ब्राह्मणं करोति शूद्रं वा करोति । तस्मात् कर्म प्रधानमत्र । पुराणालोचन.शास्त्रालोचन.सभायां तस्य सदैव योगदानमासीत् । बलरामदासस्य प्रतिभां सन्दर्श्य तदानीं ब्राह्मणानां इर्षा सीमा लंघिता । एकदा मुक्तिमण्डपे भगवद्गीता.आलोचना प्रसंगे शूद्रो बलरामः उपस्थित आसीत् । पण्डित.ब्राह्माणास्तं तत्र दृष्ट्वा भर्सितवन्तः । तं विताडयितुं राजानं प्रतापरुद्रदेवं अनुरोधितवन्तः । किन्तु एकेन शूद्रमुखेन वेदोच्चारयितुं बलरामः ब्राह्मणानां सम्मुखे प्रतिज्ञां कृतवान्। तदा पण्डिताः जनैकं मुक.वधिर.भिक्षुक.हरिदासं मुक्तिमण्डपं प्रति आनीतवन्तः । यदा बलरामः हरिदासस्य मस्तकस्पर्शं कृतवान् तदा स निरर्गलतया वेदपाठं चकार । एतद्दृष्ट्वा पण्डिताः आश्चर्यचकिताः बभूवुः । राजा बलरामस्य अलौकीकतां सन्निरीक्ष्य प्रसन्नोऽभूत् । ससम्मानं बलरामं प्रणामं चकार । श्रूयते जगमोहन.रामायण.रचनावसरे बलरामदासः प्रभु.जगन्नाथेन सह लंकां गतवान् । तस्मिन्नेव काले जगन्नाथः बलरामाय किमपि सुवर्णहारं रक्षणाय प्रदत्तः । प्रातः श्रीमन्दिरे सेवकैः जगन्नाथ समीपे हारो न दृष्टः । अत्र बलरामः जगन्नाथस्य हारं स्व समीपे दृष्ट्वा तस्मै प्रत्यावर्त्तयितुं श्रीमन्दिरमागतवान् । सर्वे बलरामं चौर इति कथितवन्तः । कारागारेऽपि निपतितः सः । रात्रौ स्वप्ने बलरामस्य स्वरूपं महाप्रभोः ज्ञात्वा क्षमां ययाच कारामुक्तं च चकार राजा । जगन्नाथः सदैव सिद्ध.योगिनिभिः प्रपूजितः इति बलराम अभाणि ।

बलरामदासः रामतारकमन्त्रस्य सिद्धसाधक आसीत् । समग्र.मध्ययुगीय.साहित्येषु बलरामस्य कतिपयानि साहित्यानि कुसंस्कारादि क्षेत्रेषु समाजविप्लवस्य वह्निं प्रज्वालयन्ति । सम्माज संस्कारकार्येषु सहायकाः भवन्ति । बलरामस्य बहवो रचनावल्यः दृष्टिगोचरा भवन्ति । तेषु जगमोहन रामायण;दाण्डि रामायणद्ध. ब्रह्मपुराण.महाभारत. चण्डीपुराण. लक्ष्मीपुराण. कुरालपुराण. नामरत्नगीता.मृगुणीस्तुति. दुर्गास्तुति. कान्तकोइलि. कमललोचन चउतिषा.वारमासी. भावसमुद्र. वट अवकाश.भक्ति रसामृत सिन्धु. सभाविनोद. रामविभा.कृष्णलीला.रसकेलि. ब्रह्माण्डभुगोल. शरीरभुगोल. बेढा परिक्रमा.अर्जुनगीता. गजनिस्तारण गीता. भगवद्गीता. अमरकोशगीता. गुप्तगीता. छतिश गुप्तगीता. गरुड गीता.विराटगीता. गणेश विभूति गीता. गीतासार.नीलसुन्दर गीता. कलिभारत. बउला अध्याय. पणस चोरी इत्यादि ग्रन्थाः वैशिष्ट्यमावहन्ति । एषु ग्रन्थेषु जगमोहन रामायणं साहित्यदृष्ट्या अत्युन्नतम् । दाण्डि रामायणं सप्तकाण्ड विशिष्टम् । मूल.संस्कृत.रामायणस्य स्वाधीनानुवादः । ब्रह्माण्ड भुगोलः तत्त्वमूलकः । अत्र पिण्ड.ब्रह्माण्डविवरणी समुपलभ्यते । गुप्तगीता वा ब्रह्मगीता गद्यपद्ययोः संगठनम् ए आध्यात्मिकी प्रवृत्तिः । अमरकोषगीता विराटगीतयोः ब्रह्मज्ञानं प्रचुरम् । ज्ञानचूडामणिः गद्यः यौगिकः । श्रीमद्भगवद्गीता मूलगीतायाः सहज लोकप्रसिद्धः पद्यानुवादः । लक्ष्मीपुराणं क्षुद्रकाव्यम् । नारीसशक्तीकरण.विशुद्ध.भक्तेश्च प्रतिपादनमत्र । अन्ये ग्रन्थाः आध्यात्मिकचेतनाषु परिपूर्णाः । जगमोहन रामायणं दाण्डिवृत्तेन ;विषमाक्षरद्ध लिखितमस्ति । स्वकीय मौलिकप्रतिभया तेन रामायणस्य विरचनं कृतम् नानुवादेन । तात्कालिक समाजस्य जातिभेदप्रथां विलोक्य सत्शिक्षायै तेन लक्ष्मीपुराणं संपादितम् । यत्तु सर्वेषामुत्कलीयानां गृहे गृहे परिचितम् । मध्ययुगीय सिद्धसाहित्य परंपरायां तस्य स्थानं महत्वपूर्णं भजते । साहित्य माध्यमेन सः आध्यात्मिकविप्लवं सृष्टिकर्तुं समर्थोऽभूत् । ओडिआजातेः सश्चिरो नमस्यः ।

**नन्दप्रदीप्तकुमारः**

# अमृतवाणी गीतातत्वार्थ बोधः

**गीता ज्ञानप्रियः सदा सुखी भवति।**



शत्रुघ्नश्रीनिवासाचार्यः ( पंडित शंम्भुनाथ शास्त्री वेदान्ती ) भागलपुर ( बिहार )

**ध्यायतो विषयान्पुंस**
**सङ्गस्तेषूपजायते ।**
**सङ्गात्सञ्जायते कामः**
**कामात्क्रोधोत्रभिजायते॥**
**( गीता/2/62 )**

हिन्द्यां पद्यानुवादः सवैय्या-

**ध्यान करै विषयी सङ्ग मानव**
**मान गुमान सदा उठि धावै,**
**ताहि सो काम जगे मन भीतर**
**काम ते क्रोध भयंकर आवै।**
**मात पिता गुरु देव न मानत**
**काम वही जो करै मन भावै,**
**हरि सो नेह करै कबहुँ नहि**
**व्याकुल होई सदा दुःख पावै॥**

**हरिभक्तिविहीनानां**
**मनः विषयकारकम्**
**तस्मात् कामः समुत्पन्नः**
**कामः क्रोधस्य कारणम्॥**

**संस्कृतभाष्यम्-** भगवद्भक्तिविहीनानां जीवानां विषयसङ्गतिः स्वभावत एव भवति।हरिचिन्तनं विहाय मानवःसंसारमाश्रयति। यदा विषयासक्तः जीवःहरेराश्रयं त्यक्त्वा सासारिकपदार्थानां चिन्तनं करोति, तदा शनैः शनैःद तेषु सांसारिकपदार्थेषु विषयेषु तस्य सङ्गः समुत्पन्नः भवति। विषयेषु सङ्गः एव रागः आसक्तिः मन्यते। तस्मात् सङ्गतिकारणात् जीवानां मनसि मनसिजः पञ्चशरं नीत्वा कामोद्वेगं समुत्पादयति। कामनायाः पूरत्यर्थं विषायासक्तः जीवःचेतनाशून्यो भूत्वा लोकलज्जां विहाय इतस्ततः भ्रमति । यदा कामस्य पूर्तिः नहि भवति चेत् तदा तस्मिन् जीवे क्रोधः समुद्भवति। कथ्यते च

**' कामातुराणां नहि लोकलज्जा'**
**कामनानुकूलपदार्थप्राप्तौ सति**

तेषु पदार्थेषु लोभः संजायते। 'लोभः पापस्य कारणम्'इति न्यायेन जीवः नैर्घिण्यपापकर्मणि प्रवृत्तो भवति। कामनाजन्यलोभ प्राप्त्यभावे विरोधिनं प्रति तस्मिन् कामासक्तजीवे क्रोधः समुत्पद्यते। तस्मात् अवसादग्रस्तो भूत्वा व्यर्थं जल्पति। विषयाणां चिन्तनं कुर्वतः मानवस्य विषयेष्वेवासक्तिर्भवति। आसक्तेरव कामःजायते।कामात् क्रोधस्य उत्पत्तिर्भवति । 'विषयासक्तेः परिपक्वावस्था कामः' तस्माद्धि विषयत्यागानन्तरमेव कामक्रोधादीनां शमनम् भवितुमर्न्हति। निष्कामकर्मणि रतः जीव एव विषयत्यागी भवितुं शक्यते। हरिपादपद्माश्रयी पुरूषः विषय त्यागी भूत्वा निरन्तरमानन्दमनुभवति।

शाब्दबोधः- ढ1 लविषयासक्तेः परिपक्वावस्था कामः। ढ2 ल हरिभक्तिविहीनत्वं विषयासक्तत्वम्।

**अन्वय शब्दार्थः-**

**श्लोकसंकेतः--**ध्यायतो विषयान्पुंसः कामात्क्रोधोत्रभिजायते

( गीता/2/62)

विषयारशब्दादिविषयों का,
ध्यायतः अनादि वासना के फलस्वरूप चिन्तन करने-वाला, पुंसः जिसने अपने चित्त को मुझमें नहीं लगाया ऐसे पुरुष का,तेषुशब्दादिविषयों के प्रति सङ्गः आसक्ति (प्राप्त करने की इच्छा,उपजायतृेउत्पन्न होती है, सङ्गातृविषयों के प्रति अनुराग से,कामृकामनृ वासना (विषयों के प्रति अनुराग की वह परिपक्वावस्था कामना है जिसके उत्पन्न होने पर पुरुष विषय का भोग किये विना नहीं रह सकता) ,सञ्जायतृ उत्पन्न होती है, कामातृकामना से (कामना की पूर्ति नहीं होने पर) क्रोधृक्रोध,अभिजायतृेउत्पन्न होता है।

**तत्वार्थः-** विषयों का चिन्तन करने वाले पुरुष को विषयों की सङ्गति हो जाती है, और धीरे -धीरे विषयों में आसक्ति हो जाती है। विषयों में आसक्ति के कारण काम की उत्पत्ति हो जाती है तथा काम से क्रोध होता है।

**रहस्यात्मक-तथ्य -** पूर्व जन्मों के विषय सङ्ग से मनुष्य का मन भगवान् के चिन्तन में नहीं लगता है। वह इन्द्रियों को संयमित करने का बलात् यत्न तो करता है ,किन्तु अनादि काल से विषयरसास्वादन अभ्यास के कारण वासना नष्ट नहीं होती, फलतः वह ईश्वर चिन्तन न कर संसारिक पदार्थों के चिन्तन का अभ्यासी हो जाता है। इस कारण से उन पदार्थों में उसकी आसक्ति बढ़ने लगती है। विषयासक्ति से काम उत्पन्न हो जाता है जो मनुष्य के जीवन के उन्नयन में बाधक ही नहीं अपितु दुर्जय शत्रु भी है।आसक्ति की परिपक्वावस्था का नाम काम है। जब कामना की किञ्चित-किञ्चित् पूर्ति होने लगती है तब उसके प्रति लोभ बढ़ने लगता है ।अनुकूल पदार्थों की पूर्ति नहीं होने पर विरोधीकारकों के प्रति क्रोध उत्पन्न होने लगता है जिससे वह मनुष्य अवसादग्रस्त होकर अधोगति को प्राप्त होता है।

## ।।गीतोपनिषद् ज्ञानामृतं।।



गीताज्ञान संचरण समितिः, पटना, विहार, अध्यक्षः डॉक्टर सुदर्शन श्रीनिवास शाण्डिल्यः




। हरे हरे हरे हरे हरे हरे।
सर्वैः ज्ञातं यद् गीताज्ञानम्
उपनिषद्सारभूता। । गीता स्वयमपि
उपनिषद्भूता।। तेन गीतायाः
प्रत्येकम् अध्यायान्ते
'श्रीमद्भगवद्गीतासूपनिषत्सु ' इत्युल्लेखः
प्रतिष्ठितः पूजितश्च।।

तेन नूनमस्य मूलमुपनिषत्सु
शोभते।
यथा गीतायां
गीताध्यायः 2श्लोक संख्या 51
कर्मजं बुद्धियुक्ता हि फलं त्यक्त्वा
मनीषिणः। जन्मबन्धवि निर्मुक्ताः पदं
गच्छन्त्यनामयम्।।

## 'तत् पवित्रस्थानं पुण्यस्थलं वा यत्र धर्ममयभावेन श्रद्धापूर्वकं जनाः

महाकवि कालिदासः संस्कृत साहित्यस्य अमर कविरस्ति। ते संस्कृतसाहित्यजगति स्वसप्तकृतिभिः1 मूर्धन्यस्थानं लब्ध्वा कविशिरोमण्युपाधिं प्राप्तवन्तः। महाकविकालिदासस्य कृतिषु लोकजीवनं प्रधानम्। तेषु कृतिषु लोकसंस्कृतिः प्रेमसौन्दर्यं प्रकृतिः धर्मः दर्शनमादयः च विशदरूपेण वर्णिताः। महाकवि कालिदासेन स्वरचनासु तीर्थ माहात्म्यमपि प्रतिपादितम्। तीर्थेन तात्पर्यमस्ति- 'तत् पवित्रस्थानं पुण्यस्थलं वा यत्र धर्ममयभावेन श्रद्धापूर्वकं जनाः यात्रापूजास्नानार्थं गच्छन्ति।' अत्रापि त्रिविधं तीर्थं प्राप्यते। महाकवि कालिदासेन स्वरचनासु महर्षि नारदकण्वविश्वा मित्र वशिष्ठ दुर्वासामारी चपरशुरामादी नामृषीणां महिमामण्डनं कृतम्, यत् जङ्गमतीर्थस्योदाहरणानि सन्ति। महर्षिमारीचस्य दर्शनमहत्त्वं प्रदर्शयन् राजादुष्यन्तः वदति, यत् – पूर्वं कारणं भवति, तत्पश्चात् कार्यं भवति। किन्तु भवतां दर्शनप्रभावात् मया पूर्वं सपत्नीपुत्रदर्शनं प्राप्तं, तत्पश्चात् भवतां दर्शनमभवत् - उदेति पूर्वं कुसुमं ततः फलं, घनोदयः प्राक् तदनन्तरं पयः। निमित्त नैमित्त योरयं क्रमस्तव प्रसादस्य पुरस्तु सम्पदः। महाकवि कालि दासस्य कृतिषु सत्यक्षमादयादान ज्ञानविज्ञान धैय'संयम मधुरभाषणादिनीतिमूल्याः विकीर्णाः सन्ति, यत् मानसतीर्थस्य प्रतीकोऽस्ति। अत्र दानस्य सर्वश्रेष्ठोदाहरणं राजारघौ प्राप्यते।

# रोगहरण हनुमत् मन्दिरस्य चतुर्थस्थापना दिवसोपलक्ष्ये नवदिवसीयं अखण्ड कीर्तनम्





**प्रयागराजः। वार्ताहरः।** प्रतिष्ठान पुरेस्थिते देवराहाआश्रमे प्रतिवर्षानुसारि अस्मिन् वर्षेऽपिगत 10 जुलाईतः रोगहरण हनुमत् प्रतिष्ठा दिवसोपलक्ष्ये श्रीमहन्त, संचालकश्च स्वामी रामदास महाभागस्य निर्देशने श्री फूलचन्द्र द्विवेदी, राजेन्द्र कुमार तिवारी दुकानजी, इत्यन योर्महाभागयोः संयोजनेनव दिवसीयः अखण्ड रामनाम संकीर्तनं प्रारम्भ 18 जुलाई पर्यन्तम् अहर्निशं अचलत। गत सोमवासरे तस्य पूर्णाहुतिः हवन कर्मणा सम्पाद्य अनन्तरे विशाल भण्डारा सम्पादिता।

अस्मिन् अवसरे सायंकाले 5 वादनतः भजन सन्ध्यायाः मनोहारि प्रस्तुतिः लोकप्रियः प्रसिद्धश्च गायकः रत्नेश द्विवेदी, संयोजने अभवत्। अस्यां भजन संध्यायां गन्धर्व सम्राटरत्नेश द्विवेदी, हरेराम द्विवेदीतयोः शिष्य गायकाः सुमधुर कण्ठेन भजनानि श्रावयन् करतालिभिः बहु प्रशंसिताः अभवन्। विशााले भोजन प्रसाद ग्रहण क्रमेटी करमाफी आश्रमस्य अधिपतिः स्वामी हरिचैतन्य ब्रह्मचारी जगद्गुरू रामानुजाचार्य श्रीस्वामी धराचार्य, जगद्गुरू रामानुजाचार्य स्वामी घनश्यामाचार्य निम्बार्क आश्रमस्य महन्त श्री सदृशाः अनेकाः सन्त महात्मानः विद्यन्ते। कार्यक्रमोऽयं विलम्बेनरात्रौ 11 वादन पर्यन्तं प्रचलत्। बहुजन सम्मर्द भोजन प्रसादं ग्रहणं कृत्वा संगीत सन्ध्यायाः आनन्दम् प्राप्तवन्तः।

# मुखवर्णिका-वेषभूषादयः आहार्याभिनयाः रङ्गे प्रदर्श्यन्ते न तु क्रियन्ते

नाट्यशास्त्रे चतुर्विधानामभिनयानां विवरणमुपलभ्यते। तेषु आहार्याभिनयः अन्यतमः। नाट्यशास्त्रस्य एकविंशतितमेऽध्याये आहार्याभिनयस्य विस्तृतं विवरणं उपलभ्यते । तदनुसृत्य अस्मिन् शोधलेखे विमर्शा कृता। अहार्याभिनयः इत्यस्य कोऽर्थः, आहार्याभिनयः इति नाम कथमायातः, नाट्ये अस्याभिनयस्य महत्त्वं किम्?, पुस्तः अलङ्कारः अङ्गरचना सज्जीवञ्चेति आहार्याभिनयस्य चातुर्विध्यम् च चर्चिताः अत्र। सन्धिमः व्याजिमः वेष्टिमश्चेति त्रिविधः पुस्तः अपि च माल्यम्, आभरणं, वासांसि चेति त्रिविधः अलङ्कारः विवरीताः। अङ्गरचनायां स्वभावजानां वर्णानां विवरणमपि च वर्णानां संयोगेन उपवर्णानामुत्पत्तिः कथमिति उक्तः। चतुष्पदः, द्विपदः, अपदश्चेति त्रिविधः सज्जीवम् उक्तः। अन्ते नाट्ये युद्धस्याभिनये उपयुज्यमानानां आयुधानां विषयः, अन्येषां नाट्योपकरणानां विषयश्च चर्चितः।

प्रमुखाः शब्दाः-आङ्गिकः, वाचिकः, सात्त्विकः, आहार्यः, पुस्तः, अलङ्कारः, अङ्गरचना, सज्जीवः सज्जीवं वा, नेपथ्यविधिः, सन्धिमः, व्याजिमः, वेष्टिमः, अभिनयः। भरतमुनिः नाट्यशास्त्रस्य अष्टमेऽध्याये आङ्गिकः, वाचिकः, सात्त्विकः, आहार्यश्चेति चतुर्विधः अभिनयः इति वक्ति। तदेवम् - आङ्गिको वाचिकश्चैव ह्यहार्यः सात्त्विकोऽपरः। ज्ञेयास्त्वभिनयो विप्राः चतुर्धा परिकल्पितः।।1 इति ।तत्र नेपथ्यजो विधिः अर्थात् नेपथ्ये पात्रानुसारेण क्रियमाणः वेषभूषणादि-विधिः आहार्याभिनयः इति कथ्यते। नाट्यस्य शुभं ये इच्छन्ति ते नेपथ्यविधौ प्रयत्नं अवश्यमेव कुर्युः। तदुक्तं भरतमुनिना - आहार्याभिनयो नाम ज्ञेयो नेपथ्यजो विधिः। तत्र कार्यः प्रयत्नस्तु नाट्यस्य शुभमिच्छता।।2 इति आङ् इत्युपसर्गपूर्वकस्य 'हृञ्-हरणे' इति धातोः ण्यत् प्रत्ययेन निष्पन्नः आहार्यशब्दः। आहरणीय इत्यर्थः कोशेषु3 दृश्यते। मुखवर्णिका-वेषभूषादयः आहार्याभिनयाः रङ्गे प्रदर्श्यन्ते न तु क्रियन्ते। अतः नेपथ्ये कृत्वा रङ्गं प्रति आहरणीयः इत्यर्थे आहार्याभिनयः इति शब्दः आयातः। नेपथ्यविधिमपि स्वतः नटः एव करोति इति नास्ति। कर्नाटकस्य यक्षगानकलायां नेपथ्यविधिमपि नटः एव करोति। भरत नाट्यादिष्वपि एवमेव दृश्यते। किन्तु नाटकादिषु प्रायः अन्येषां साहाय्येनैव नेपथ्यविधिः क्रियते। अर्थात् अन्येषां साहाय्येनापि आहार्याभिनयः कार्यः भवति। अतः अन्येषां साहाय्येन क्रियमाणः नेपथ्यविधिः अभिनये किमर्थ मन्तर्भवति इति चेत्; उच्यते- रावणस्य पात्रवारी एकः रामवत् वेषभूषादिकं धृत्वा उत्तमम् अभिनयं करोति चेदपि रसनिष्पत्तिः न सम्भवति अपि च रसाभासः सञ्जायते।

# तेषां च न परस्परं गुणगतो भेदो वर्तते

ततो महेश्वरस्य संकल्पमात्रात् पार्थिवाणुसंयुक्तेभ्यस्तैजसेभ्यः परमाणुभ्यो महदण्डं जायते, तत्र ब्रह्मा उत्पद्यते। स च मनुदेवर्षिपितृगणान् विविधान् मनुष्याँश्च सृष्ट्वा तेषां पूर्वजन्मकर्मानुरूपेण धर्मज्ञान वैराग्यैश्वर्यैः संयोजयतीति। अनयैव रीत्या सृष्टिरग्रे गच्छति। प्राच्यचिन्तने वैशेषिकदार्शनिकैरिव पाश्चात्त्यदर्शनचिन्तने च जगतो मूलकारणत्वेन परमाणूनां स्वीकर्तारो दार्शनिका लभ्यन्ते। तेषाञ्च चिन्तने यदा पदार्थविभजनं कारं कारमग्रे गम्यते एकदा हि तामवस्थां प्राप्नुमः, यस्यामवस्थायां पदार्थो विभक्तो भवितुं न शक्नोति, अविभक्तावस्थायाः पदार्थस्तावत्परमाणुरुच्यते। तादृशेभ्यः परमाणुभ्य एव जगज्जायते। तथा परमाणूनां जगतो मूलकारणत्वस्य मन्वानेषु एम्पेडोक्लीज7- एनेक्जागोरस8- ल्युसिपस 9-डेमोक्रिटस 10- आदिषु दार्शनिकेषु डेमोक्रिटसः प्रसिद्धोऽग्रगण्यश्चासीदिति। तेन तथा परमाणोः कृते 'एटम' इति पदं प्रयुक्तमासीत्। ग्रीकभाषायाम् 'ए' इत्यस्यार्थो रहितोऽभावो वासीत्, 'टम' इत्यस्यार्थो विच्छेद इति आसीत्



। एतावता 'एटम' इत्यनेन पदेन विच्छेदरहित इति ज्ञायते स्म। अतो डेमोक्रिटसमहोदयेन तथा पदं प्रयुक्तमासीत्। तथा एटमपद वाच्य परमाणुतत्त्वमेव जगन्मूलकारणमिति तेषां मतम्। तत्र केचन एम्पेडोक्लीज- तदनुयायिनस्तथा जगन्मूलभूततत्त्वानां पार्थिव-जलीय-तैजस-वायवीयभेदाच्चतुर्विधत्वमुररीकुर्वन्ति। एम्पेडोक्लीजमते तेषु परमाणुषु प्रेम-घृणात्मकतत्त्वद्वयेन गतिरुत्पाद्यते। ततश्च तेषां संयोगेन जगदुत्पत्तिस्तेषां वियोगेन च तद्विनाश इति। एनेक्जागोरसोऽपि तथैव मनुते परं भेदः कुत्र इति चेदस्य मते न केवलं चतुर्विधान्येव जगन्मूलभूतानि तत्त्वानि अपि तु नैकानि, तेषु जगन्मूलभूतेषु परमाणुरूपेषु तत्त्वेषु नाउसाख्यपदार्थेन गतिरुत्पाद्यते। तथा गतिमतां परमाणूनां परस्परं संयोगात् सृष्टिश्चेत् तेषां वियोगात् प्रलय इति। डेमोक्रिटसमते तु स्वतो गतिशीला हि परमाणवः। तेषां च न परस्परं गुणगतो भेदो वर्तते परन्तु परिमाण-आकृत्यादिगतो भेदः। तेषां परमाणूनां परिमाणाकृत्यादिगतभेदाद् एव तेभ्यो जातानि वस्तूनि भिद्यन्ते।

# काव्यं नाम सद्यविगलितवेद्यान्तरानन्दास्वादनम्

काव्यं नाम सद्यविगलितवेद्यान्तरानन्दास्वादनम्। तच्च काव्यमधिकं रमणीयमुपादेयमानन्ददायकञ्च भवति गुणालङ्कार रस रूपकाव्य तत्त्व संज्ञानेन। काव्यालङ्कारकाव्यप्रकाशसाहित्यदर्पणादि काव्यतत्त्वग्रन्थपरिशीलनेन काव्येषु सुतरां व्युत्पत्तिः विपश्चिताम्। तादृशेषु काव्यतत्त्वग्रन्थेषु सम्मानीयः खलु भोजनरेन्द्रप्रणीतः श्रृङ्गारप्रकाशः। सत्यपि प्रसिद्धौ काव्यतत्त्वग्रन्थरूपेण ग्रन्थस्यास्य व्याकरणतत्त्वालोचनरूपं किञ्चन वैशिष्ट्यम् विशेषतां विदधाति विद्वत्संसदि। कारकसमासादिवहुविधानि व्याकरणतत्त्वान्यत्र सुसंहितानि। तत्र शब्दार्थौ सहितौ काव्यमिति लक्षणान्तर्गतयोः शब्दार्थयोः व्याख्यानावसरे तद्विभागनिरूपणे च प्रातिपदिकार्थः समुपवर्णितः। द्वादशविधशब्दानां द्वादशविधेष्वर्थेषु अन्यतमोऽयं प्रातिपदिकार्थः। वैयाकरणानां प्रातिपदिकार्थविभाजनाद् भोजनरेन्द्रस्य प्रातिपदिकविभाजनमुत्कृष्टं सुकल्पितञ्च। यद्यपि प्रातिपदिकस्यैका मौलिकसंज्ञा प्रदत्ता, तथापि प्रातिपदिकार्थस्य संज्ञावैशिष्ट्यादिकं किमपि नोच्यते। परं तस्य सुस्पष्टविभाजनं तेन कृतम्। लिङ्गं नाम तृतीय प्रातिपदिकस्य विभागवर्णने स्त्रीलिङ्गस्य कापि संज्ञा न प्रदत्ता। तथापि शुद्धादिविभागानामुदाहरणरूपेण सर्वदैव स्त्रीलिङ्गस्य प्राधान्यं स्वीकृतम्। अतः स्त्रीलिङ्गवाचकशब्दानामुदाहरणं प्रारम्भे एव प्रदत्तम्। स्वरूपमनुकार्यश्चेति स्वार्थप्रातिपदिकस्य दृष्टान्तः श्लोकेन समुल्लिखितः। पुनश्च अनाश्रयरूपप्रातिपदिकार्थस्योदाहरणं प्रसिद्धशास्त्रेषु प्रदत्तम्। अन्तिमे भावस्यापि विवेचनं समाम्नातम्। भोजनरेन्द्रकृतस्य प्रातिप्रतिपदिकार्थस्य विभाजनं सुतरां वैज्ञानिकं वर्तते। परन्तु बहुषु स्थानेषु समुचितसंज्ञाभावात्तस्य सार्थकता न विद्यते।

**प्रमुखाः शब्दाः-** शब्दः, अर्थः, प्रातिपदिकम्, प्रातिपदिकार्थः, प्रकृतिः, प्रत्ययः, समासः, नियतोपस्थितिः, स्वार्थः, द्रव्यम्, लिङ्गम्, स्वरूपम्, अनुकार्यम्, द्रव्यम्, लिङ्गम्, आश्रयरूपम्, अनाश्रयरूपम्, शुद्धम्, मिश्रम्, सङ्कीर्णम्, उपसर्जनम्, आविष्टम्, अव्यक्तम्, गुण, परिमाणम्, सम्बन्ध इत्यादयः।

**उपोद्घातः-** सरस्वतीकण्ठाभरणस्य श्रीमद्भोजनरेन्द्रस्य विरचितः साहित्यप्रकाशो नाम श्रृङ्गारप्रकाशः खलु संस्कृतकाव्यशास्त्रस्योत्कृष्टो ग्रन्थः। न केवलं काव्यशास्त्रस्य मुख्यवेदाङ्गस्य व्याकरणस्याप्यालोचनात्मकोऽयं ग्रन्थः। एतादृशे प्रौढग्रन्थे षट्-त्रिंशत् प्रकाशा विद्यन्ते। तत्र प्रथमप्रकाशे काव्यलक्षणविमर्शकाले ग्रन्थकृतोच्यते- काव्यं शब्दार्थयोः साहित्यमामनन्ति। तद्यथा ‘शब्दार्थौ सहितौ काव्यम्’1 इति।’ तत्र येनोच्चारितेनार्थः प्रतीयते स शब्दः।2 अयं शब्दः द्वादशधा।3 पुनः यः शब्देन प्रत्याय्यते स चार्थोऽपि द्वादशधा- 1. क्रिया 2. कालः 3. कारकम् 4. पुरुषः 5. उपाधिः 6. प्रधानम् 7. उपस्कारार्थः 8. प्रातिपदिकार्थः 9. विभक्त्यर्थः 10. वृत्यर्थः 11. पदार्थः 12. वाक्यार्थः इति। एवं शब्दार्थयोः सम्बन्धोऽपि द्वादशधा4 यस्तु साहित्यपदवाच्यः।

**प्रसङ्गः-** काव्यस्यात्मा शब्दार्थाविव। भोजनरेन्द्रेण तयोः शब्दार्थयोर्बहुधा विभाजनं कृतं। तत्र द्वादशधा शब्दाः पुनर्द्वादशधार्था विद्यन्ते। द्वादशविधेष्वर्थेष्वन्यतमः खलु प्रातिपदिकार्थः। श्रृङ्गारप्रकाशग्रन्थस्य चतुर्थप्रकाशे क्रिया-काल-कारक-पुरुषाणामर्थानाम्, पञ्चमप्रकाशे उपाधि-प्रधान-उपस्कारार्थ-प्रातिपदिकार्थानाम्, षष्टप्रकाशे च विभक्त्यर्थ-वृत्यर्थ-पदार्थ-वाक्यार्थानां सम्यग्विचारः कृतः। अतएव पञ्चमप्रकाशे उपाधिः प्रधानम्, उपस्कारार्थश्चैतेषामालोचनानन्तरमेव प्रातिपदिकार्थस्य विमर्शनं कृतं तत्र भवता भोजराजेन। अनेन प्रमीयते यत् काव्यात्मभूतस्य शब्दार्थयोरर्थस्य विभाजनप्रसङ्गे ग्रन्थकृतोच्यते प्रातिपदिकार्थस्वरूपम्। अथवा शब्दार्थमयस्य काव्यस्य ‘कोऽयमर्थः’5 इति प्रश्नस्योत्तरविवेचने द्वादशविधार्थव्याख्यानकाले प्रातिपदिकार्थस्य विचारः कृतः इति।

**प्रातिपदिकस्वरूपम्-** द्वादशधा शब्देषु प्रकृतिः अन्यतमा। सा च प्रकृतिः पुनस्त्रिधा- धातुरूपा, प्रत्ययरूपा, प्रातिपदिकरूपा च। तत्र प्रातिपदिकरूपप्रकृतेरालोचनायां कविना प्रातिपदिकस्य संज्ञा प्रदत्ता- ‘‘नामाव्ययानुकरण कृत्तद्धितसमासाः प्रातिपदिकानि’’ इति। उक्तं चाष्टाध्याय्याम् - ‘अर्थवदधातुरप्रत्ययः प्रातिपदिकम्’ (1.2.45), ‘कृत्तद्धितसमासाश्च’ (1.4.46) इति। वार्तिककारेण महर्षिणा कात्यायनेनापि प्रातिपदिकविषये उक्तम्- ‘निपातस्य चानर्थकस्य प्रातिपदिकसंज्ञा वक्तव्या’ इति। तत्रार्थवद्ग्रहणेन नामाव्ययानुकरणानि गृह्यन्ते। कृत्तद्धितसमासास्तु कण्ठोक्त्या। नन्वेतेऽप्यर्थवन्त एव। किन्तु कृत्तद्धिताश्च प्रत्ययाः, तेषामप्रातिपदिकग्रहणात् प्रातिपदिकसंज्ञा न प्राप्नोतीति कृत्तद्धितग्रहणेन तदुपसंगृह्णाति। समासग्रहणेन त्वर्थवत्समुदायस्य समासस्यैव प्रातिपदिकसंज्ञेति ज्ञापयन् तथाविधस्य वाक्यस्यैतां निवर्तयति। प्रातिपदिकविभाजनम् प्रातिपदिकानि हि नाम-अव्यय-अनुकरण-कृत्तद्धित-समासभेदात् प्रकाराः।

1. नामप्रातिपदिकम् - तत्र अनपेक्षितशब्दव्युत्पत्तीनि सत्त्वभूतार्थाभिधायीनि च नामानि। तानि द्विधा - आविष्टलिङ्गानि अनाविष्टलिङ्गानि च।

2. अव्ययप्रातिपदिकम् - प्रायेणाऽलिङ्गसंख्याशक्तीन्यव्ययानि। तानि षोढा-अव्यय-निपात-गत्यु-पसर्ग-कर्मप्रवचनीय-विभक्तिप्रतिरूपभेदात्।

3. अनुकरणप्रातिपदिकम् - शब्दस्य ताद्रूप्येणाभिधानमनुकरणम्। तदपि षोढा- व्यक्तवर्णसादृश्योक्तिः, व्यक्तपदसादृश्योक्तिः, व्यक्तवाक्यसादृश्योक्तिः, अव्यक्तवर्णसादृश्योक्तिः, अव्यक्तपदसादृश्योक्तिः, अव्यक्तवाक्यसादृश्योक्तिश्च।

4. कृत्प्रातिपदिकम् - भावकारकाभिधायिनो धातुप्रत्ययाः कृतः। ते षोढा- लिङ्गिनः, अन्यलिङ्गिनः, स्वलिङ्गिनः, अलिङ्गिनः, शक्त्याद्यपेक्षिणः, अनुप्रयोगाद्यपेक्षिणश्च।

5. तद्धितप्रातिपदिकम् - भावकारकसंबन्धिस्वार्थाभिधायिनोऽधातुप्रत्ययास्तद्धिताः। ते षोढा- अलोपिनः, लोपिनः, सर्वलोपिनः, आदेशिनः, प्रदेशिनः, अप्रदेशिनश्चेति।

6. समासप्रातिपदिकम् - पृथगर्थानामेकार्थीभावः समासः। तेऽपि षोढा- सुबन्ताभ्याम्, तिङन्ताभ्याम्, सुप्तिङन्ताभ्याम्, सुब्धातुभ्याम्, सुबन्तनामभ्याम्, नामभ्याञ्चेति।

अत्रोल्लेखनीयं यत् प्रत्ययस्य8 विभाजनेऽपि भोजनरेन्द्रेण प्रातिपदिकमुक्तम्। तत्र प्रातिपदिकानि तु प्रत्ययरूपाणि। अतएवोक्तं ‘प्रातिपदिकप्रत्ययाः’ इति। ते यथा- टाबादयः (खट्वा, सुदामा) स्वादयः (कुण्डम्, कुण्डे) तसिलादयः (यतः, अतः) कादयः (अश्वकः, कुटीरः) अणादयः (औपगवः, तावकीनः) क्यजादयश्च (चित्रीयते, पुत्रकाम्यति) इति। पुनः ग्रन्थस्य प्रातिपदिकप्रकाशनामधेये द्वितीयप्रकाशे प्रातिपदिकं त्रिधा विभज्यते। तद्यथा- 1. विभक्तावयवम् 2. अविभक्तावयवम् 3. अनुकरणं चेति। तत्र विभक्तावयवं पुनस्त्रिधा - कृद्रूपं, तद्धितरूपं, समासरूपं च। अविभक्तावयवं प्रातिपदिकमपि त्रिधा- नामरूपम्, अव्ययरूपम्, निपातरूपं च।9 अनुकरणप्रातिपदिकमपि त्रिधा- साध्वनुकरणम्, असाध्वनुकरणम्, अव्यक्तानुकरणं च। वस्तुतस्त्वत्रोक्तं विभाजनं पूर्वोक्तनामाव्ययादिषट्-विभागस्य समानमेव। केवलं निपातरूपाविभक्तावयवप्रातिपदिकमतिरिक्तं यस्य वर्णनं पूर्वं न कृतम्। तदपि त्रिधैव - स्वतन्त्राः, परतन्त्राः, विशेषपरतन्त्राश्च। प्रातिपदिकविभाजनविषये ग्रन्थस्यान्तिमे भोजेन श्लोकोऽयमुक्तः- प्रकृतिप्रत्ययौ त्रेधा त्रिधोपस्कारभक्तयः। त्रिधैवोपपदप्रातिपदिकानां विभक्तयः।।

प्रातिपदिकार्थः उपाध्याद्यर्थचतुष्टयप्रकाशे क्रमेण उपाधिः प्रधानम्, उपस्कारार्थं, प्रातिपदिकार्थः इत्येतेषां विस्तृतव्याख्या प्रदत्ता। तत्र प्रातिपदिकार्थस्य व्याख्या अन्ततः कृता। प्रातिपदिकस्य अर्थः प्रातिपदिकार्थः। ‘प्रातिपदिकार्थः सत्ता’ इति काशिकायाम्। पुनः सिद्धान्तकौमुद्यां दीक्षितेनोच्यते- ‘नियतोपस्थितिकः प्रातिपदिकार्थः।’ यस्मिन्प्रातिपदिके उच्चारिते यस्यार्थस्य नियमेनोपस्थितिः स प्रातिपदिकार्थ इत्यर्थः। नियतोपस्थितिकः इति पदस्यार्थो बालमनोरमायाम्- ‘नियता उपस्थितिर्यस्येति विग्रहः। यस्मिन्प्रातिपदिके उच्चारिते यस्यार्थस्य नियमेनोपस्थितिः स तदर्थ इत्यर्थः।’ ननु ‘प्रवृत्तिनिमित्तं व्यक्तिश्चेति द्विकं प्रातिपदिकार्थः’, ‘प्रवृत्तिनिमित्तं व्यक्तिर्लिङ्गं चेति त्रिकं प्रातिपदिकार्थः’ ‘प्रवृत्तिनिमित्तं व्यक्तिर्लिङ्गं संख्या चेति चतुष्कं प्रातिपदिकार्थः’, ‘प्रवृत्तिनिमित्तं व्यक्तिर्लिङ्गं सङ्ख्या कारकं चेति पञ्चकं प्रातिपदिकार्थः’ इत्येते पक्षा ‘सरूपाणामेकशेष एकविभक्तौ’, ‘स्त्रियाम्’ इत्यादिसूत्रेषु भाष्ये स्थिता मञ्जूषायां प्रपञ्चिताश्च। किं नाम प्रातिपदिकम्? नामाव्ययानुकरणकृत्-तद्धित-समासाः प्रातिपदिकानि।12 अर्थात् नामप्रातिपदिकम्, अव्ययप्रातिपदिकम्, अनुकरणप्रातिपदिकम् कृत्प्रातिपदिकम्, तद्धितप्रातिपदिकम्, समासारपि प्रातिपदिकम्। एतेषां प्रातिपदिकानामर्थः एव प्रातिपदिकार्थः।

प्रातिपदिकार्थस्य विभाजनं स्वरूपञ्च श्रृङ्गारप्रकाशकृता श्रीमन्भोजनरेन्द्रेण प्रातिपदिकार्थस्त्रिधा विभज्यते - 1. स्वार्थः 2. द्रव्यम् 3. ‘‘लिङ्गनिमित्तशब्दसंस्कारानर्हम् अव्यक्तम्।’’ ये तावत् शब्दाः लिङ्गपरिवर्तनेऽपि अपरिवर्तनीया भवन्ति त एव अव्यक्तपदवाच्याः। अर्थात् त्रिषु लिङ्गेषु किमपि परिवर्तनं न भवति एकमेव तिष्ठन्ति ते खलु शब्दाः अव्यक्तमित्यभिधीयते। यथा- पञ्च, षट्, कति, उच्चैरिति।

उपसंहृतिः एवमेव भोजराजेन प्रातिपदिकार्थः त्रिधा विभज्यते। यद्यपि प्रातिपदिकस्यैका मौलिकसंज्ञा प्रदत्ता, तथापि प्रातिपदिकार्थस्य संज्ञावैशिष्ट्यादिकं किमपि नोच्यते। तेन प्रातिपदिकार्थस्य किमपि सुनिर्दिष्टा संज्ञा न प्रदत्ता। परं तस्य सुस्पष्टविभाजनं तेन कृतम्। तत्र लिङ्गं नाम तृतीय प्रातिपदिकस्य विभागवर्णने स्त्रीलिङ्गस्य कापि संज्ञा न प्रदत्ता। तथापि शुद्धादिविभागानामुदाहरणरूपेण तेन सर्वदैव स्त्रीलिङ्गस्य प्राधान्यं स्वीकृतम्। अतः स्त्रीलिङ्गवाचकशब्दानामुदाहरणं प्रारम्भे एव प्रदत्तम्। शुद्धादिषट्ष्वेव विभागेषु स्त्रीलिङ्गस्य प्राधान्यं प्रथमोल्लेखनं वा विशिष्टतया परिलक्ष्यते पुल्लिङ्ग-नपुंसक लिङ्गयोरनन्तरोच्चार णात्। स्वरूपमनुकार्यश्चेति स्वार्थप्रातिपदिकस्य दृष्टान्तः श्लोकेन समुल्लिखितः। पुनश्च अनाश्रयरूपप्रातिपदिकार्थस्योदाहरणं प्रसिद्धशास्त्रेषु प्रदत्तम्। अन्तिमे भावस्यापि विवेचनं समाम्नातम्। तत्रोच्यते- ‘‘विशेष्यते अविच्छिद्यते द्रव्यं येन तच्छब्दस्यार्थे प्रवृत्तिनिमित्तमर्थधर्मो विशेषणं गुणो भाव चाख्यायते। तत् त्रिधा गुणः, परिमाणम्, सम्बन्ध इति।’’ भोजनरेन्द्रकृतस्य प्रातिपदिकार्थस्य विभाजनं तस्य संज्ञा च सुतरां वैज्ञानिकी वर्तते। परन्तु बहुषु स्थानेषु समुचितसंज्ञाभावेन तस्य सार्थकतां न विदधाति।

## रम्या रामायणी कथा

मर्यादा पुरुषोत्तम श्री राम की जीवन गाथा

॥श्री राम कथा॥

**नीलाम्बुजश्यामलकोमलाङ्गं सीतासमारोपितवामभागम्।**
**पाणौ महासायकचारूचापं नमामि रामं रघुवंशनाथम्॥**

**रामाय रामभद्राय रामचंद्राय वेधसे।**
**रघुनाथाय नाथाय सीतायाः पतये नमः॥**

सुन्दर काण्डस्य संक्षिप्त कथा

श्रीरामकथायामस्मिन्काण्डे श्रीहनुमद्भक्तिशोध साधनानां विस्तृत परिचयः लभ्यते। श्रीसुन्दर काणडस्य कथा भक्तिशोध परक कथा वर्तते। समुद्र तटे यदा यन्निचयं जातं यद्भगवती सीता लङ्कायामशोकवाटिकाया मस्ति तदा एतद्विदित्वा श्रीहनुमान महाभागः श्रीरामस्य कृपयात्मनो महदाकारतां प्राप्य सागर मुल्लङ्घ्य सुरसां लङ्क्नीं च यमलोकं सम्प्रेष्य लङ्कामगच्छत्। अत्र श्रीरामभक्त विभीषणं मिलित्वा सर्वं ज्ञात्वा श्रीहनुमान्महाभागो राक्षसनगर्याः लङ्कायाः राज्ञः रावणस्य च वैभवमपश्यत्। भक्तविभीषणस्य दिशानिर्देशानसारं स अशोकवाटिकायां स्थितां भगवतीं सीतां यदापश्यत् तदा तत्र वातावरणं संदृश्य हृदये महद्दुःखं जातम्। तत्र राक्षसीभिः सा कथं पीड्यमाना अस्ति इत्यपि तेनावगतम् । श्रीहनुमान्महाभागो भगवती सीता मुपसर्प्य श्रीरामेण दत्तामङ्गुलीयकं दत्त्वा भगवती सीता निश्चयेन रामेण रक्षिष्यते इति विश्वासवर्धनमकरोत् । श्रीरामस्य कृपयाहं भवतीं रामस्य समीपं नयितुं समर्थोऽस्मि। एते राक्षसाः मत्समक्षं किञ्चदपि कर्तुं क शक्नुवन्ति। एतच्छ्रुत्वा

भगवती सीता देवी उक्तवती - हे हनुमत्! मम हृदये अखण्डविश्वासो वर्तते श्रीरामः स्वयमागत्य दोषिणो दण्डयित्वा ममाभिरक्षणं कुर्यादिति सुकार्यं भविष्यति। ततः श्रीहनुमान्महाभागः कथिततवान्, हे मातः! इदानीं भुभुक्षितोऽहम्, अधुनात्र वाटिकां गत्वा क्षुधां शान्तं करिष्यामि । ततः लङ्कायाः वृक्षान् भवनानि च नाशयन् महतीं हानिमकरोत् । रावणस्य बहून् सैनिकान् अमारयत्। सः स्वस्य बन्धनाय अङ्गीकुर्वन् रावणस्य पुरतः उपस्थापितः जातः। तत्र भगवती सीता परित्यक्तव्या इति रावणमबोधयत् सः। किन्तु रावणस्य सभायां तस्यावमाननं क्रियते । तस्य पृच्छे अग्निस्पर्शः कार्यते । हनुमान्महाभागः ततः सहसा सन् इतस्ततः धावन् रावणसाम्राज्ये सर्वत्र अग्निस्पर्शमकारयत् । ततः महदाकारतां प्राप्य सागर मल्लङ्घ्य प्रत्यगच्छत् । तत्र सर्वे वानराः आनन्दमग्नाः जाताः।

**-क्रमशः**

आचार्य अरविंद पांडेय

# ‘का नाम कला’ इत्यत्र प्रतीच्चः प्रधीवरो बैडले वदति

कलाविद्या देवीचक्रमात्मिका सेयम्। विदिता येन स मुक्तो भवति महात्रिपुरसुन्दरीरूपः।‘का नाम कला’ इत्यत्र प्रतीच्चः प्रधीवरो बैडले वदति ‘‘कला वस्तुनो हि स्वकीया आकृतिर्यया सुघटिता भूत्वा प्रत्यक्षी भवति सा सुघटितयथार्थ वैशिष्ट्याभिव्यञ्जनकारिणी क्षमता ‘कला’ इत्यनेन नाम्ना प्रोक्ता भवति।2’’ अतः ‘कं सुखं लातीति कला’ - अनया व्युत्पत्या एवं प्रतीयते यत् मनुष्यजीवने सुखस्याधारः कलैव अस्ति। यस्य जीवने कला नास्ति स पशुवत् जीवनं यापयति। कला परमानन्दस्य प्राप्तेः साधनमस्ति। यथोच्यते ‘‘लीयते परमानन्देययात्मा सा परा कला3’’ मनुष्यजीवनं समुज्ज्वलं स्यादेतदर्थं कुत्रचित् षोड़शकलानाम् चतुःषष्टिकलानाञ्च वर्णनं प्राप्यते। ललितविस्तारे चतुरशीतिकलानाम् वर्णनम् अक्रियत। कलाः सन्ति यद्यपि बहुविधाः परं तत्र पञ्चकलाः ललितकलाः इत्येतया संज्ञया सन्ति प्रसिद्धाः। ताः सन्तीमाः - (1) स्थापत्यकला, (2) मूर्तिकला, (3) चित्रकला, (4) सङ्गीतकला, (5) काव्यकला चेति। सङ्गीतकारा यया कलाया संसारं प्रमोदयन्ति सैव सङ्गीतकलेति कीर्त्यते। अन्धकारनाशाय आलोकस्य आवश्यकता यथा अनुभूयते तथैव मानवजीवने लोकोत्तरानन्दप्राप्तये सङ्गीतस्य महती आवश्यकता विद्यते। यथा भर्तृहरिणा उक्तम् -‘साहित्य सङ्गीत कलाविहीनः, साक्षात्पशुः पुच्छविषाणहीनः4’ अर्थात् यस्य जीवने सङ्गीतकलानास्ति तस्य जीवनं व्यार्थमेव प्रतिभाति। प्राचीनकालादारभ्याद्यपर्यन्तं सङ्गीतं महत्त्वपूर्णं स्थानं विन्दति। अजस्रमभ्यासं कृत्वा कोऽपि गातुं शक्नोति, किन्तु भगवत्कृपया यदि केनचिद् मधुरः कण्ठध्वनिः प्राप्यते तर्हि गानस्यानन्दः द्विगुणितो भवति। सङ्गीतकला संस्कृतसाहित्ये कथं विद्वद्भिः विचारिता। तामेव अनुसृत्य किञ्चित् उच्यते। सङ्गीतम् इति शब्दस्य व्युत्पत्तिः एवम् क्रियते। सम्यक्गीयते इति सङ्गाम्म्। यथा उक्तम् सङ्गीतरत्नाकरेण ‘गीतं वाद्यं तथा नृत्यं त्रयं सङ्गीतमुच्यते।’ गीतं नाटकस्याङ्गमितिनाट्यशास्त्रकारेणोक्तम्। तस्यानुगामी वादनं नर्तनञ्च। मनुसंहितायां सङ्गीतरत्नाकरे अमरकोषे च ‘तौर्यत्रिक’ शब्दस्यव्यवहारौ नृत्यगीतादिस्थाने दरीदृश्यते। अर्थशास्त्रे विष्णुपुराणे बौधजैनग्रन्थेऽपि च सङ्गीतशब्देन गीतं वाद्यं नृत्यं चेति त्रयं अवबोध्यते।

वायुपुराणनाट्यशास्त्ररामायणमहाभारतप्रभृतिषु ग्रन्थेषु गान्धर्वविद्यारूपेण सङ्गीतं व्यवहृतम्।

(1) नृत्तैर्वादिश्च गान्धवैः (अनुशासनपर्वः)
(2) नृत्तेषु च विशारदाः (आश्वमेधिकपर्वः)
(3) सङ्गीतमिव प्रवृत्तम् (किष्किन्धाकाण्डम्

आचार्यनारदमहोदयेन गान्धर्वस्य आभिधानिकार्थो निरूप्यते यथा - गेति गेयं विदुः प्राज्ञा धेति कारुप्रवादनम्। वेति वाद्यस्य संज्ञेयं गान्धर्वस्य विरोचनम्। अर्थात् ग शब्देन गानं लक्ष्यते, धकारेण व कारेण वैनिकस्य प्रवादनं चातुर्येण हस्ताङ्गुलिधारणं प्रवादनपदेन कथितुं वकारेण वादनं लक्षितम्। गीतं नादात्मकम्। नादात्मकं नाम नाद आत्मा स्वरूपं यस्य। रञ्जकस्य स्वरसन्दर्भो गीतमित्यभिधीयते। भरताचार्येण उक्तम् - ‘छन्दः प्रमाणसंयुक्तं दिव्यानां गानमिष्यते।’ यथा निगदितम् - गानप्रभाषं सञ्चक्रे गन्धर्वाणाम शेषतः। अन्येषां चैव विप्राणां गानं ब्रह्मप्रभाषितम्। गानं प्रभाष्यते व्युत्पाद्यतेऽनेनेति गानप्रभाषं गान्धर्वशास्त्रं, तथा ब्रह्मणि वेदे प्रभाषितं गानं समाख्यम्। नाट्यशास्त्रकारेणोच्यते गीतं चर्तुविधम्। यथा - चतस्रो गीतयः कार्या मागधी ह्यर्धमागधी। संभावितं तथा चैव पृथुला च प्रकीर्तिता।। भिन्नवृत्ति प्रगीता या या गीतिर्मागधी मता। अर्धकालनिवृत्ता च विज्ञेया त्वर्धमागधी।। सम्भाविता च विज्ञेया गुर्वक्षरसमन्विता। लघ्वरकृता नित्या पृथुला संप्रकीर्तिता।। वाद्यम् अङ्गुलीभिः सारयित्वा (यथा स्वरमण्डल तम्बुरा च) कोणस्य त्रिकोणस्य वा सहायतया (यथा वीणा, सितार, सरोद च)। ‘गज’ इत्याख्यस्य साधनस्य संघर्षणेन (यथा शन्तुर) वाद्यमानानि वाद्यानि ततवाद्यान्यभिधीयन्ते। ततवाद्येषुवीणायाः वल्लक्याः परिवादिन्याः तन्त्याश्च कविना अनेकशः प्रयोगः कृतः। शास्त्रेषु त्रिविधाः वीणाः एकतन्त्री, द्वितन्त्री, त्रितन्त्री चोल्लिखिताः। भगवान् ब्रह्मा नाट्यवेदस्य आविष्कर्ता भरतमुनेश्च गुरुरासीत्। अस्य वाणी ‘ब्राह्मीवाणी’ इत्याख्यां लब्धवती। ब्रह्मया वीणाया अन्यानि नामानि सन्ति - घोषा, घोषकं, घोषवती, एकतन्त्री च, एकतन्त्र्याः सुविस्तरं वर्णनमुपलभ्यते सङ्गीतरत्नाकराख्ये प्रसिद्धे सङ्गीतग्रन्थे। इयं सर्वासां वीणानां जननी। अस्या दर्शनं स्पर्शश्च भुक्तिं मुक्तिञ्च जनयतः। सङ्गीतिकानि वाद्यानि सन्ति चतुर्विधानि तथा चोक्तं सङ्गीतरत्नाकारे - तततं सुषिरं चावनद्धं घनमिति स्मृतम्। चतुर्धा तत्र पूर्वाभ्यां श्रुत्यादिद्वारतो भवेत्। तन्त्र्या ततं विस्तारितं ततमित्युच्यते। सुषिरं सच्छिद्रं वंशादि। चर्मणा अवनद्धं पिहितं वदनं मुखं यस्य तदवनद्धम्। घनो मूर्तिरुच्यते। तन्त्री चर्मादिहीनं कांस्यादिघटित मित्यर्थः। सा मूर्तिः अभिघातात् यत्र ध्वन्यते वाद्यते तदघनमिति। नारदविरचिते सङ्गीतमकरन्दे एकोनविंशतिसंख्यानां वीणानां नामानि लभ्यन्ते। तानि सन्ति कच्छपी, कुब्जिका, चित्रा, वहन्ती, परिवादिनी, जया, घोषवती, ज्येष्ठा, नकुली, महती, वैष्णवी, ब्रह्मी, रौद्री, कूर्मी, रावणी, सारस्वती, किन्नरी, सैरन्ध्री, घोषका च। परमासां विवरणं नैव दत्तम्। तन्त्रीणां संख्यायाः, वादनविधिभेदेन च एकस्याः वीणायाः अनेके भेदाः समभवन्। यथोच्यते - ‘तन्त्रीभेदैः क्रियाभेदैवीणावाद्यमनेकधा।’ नृत्यम् भावाभिनयहीनं तु नृत्तमित्यभिधीयते। रसभाव व्यञ्जनादियुक्तं नृत्यमितीर्यते। कौषीतकी ब्रह्मणानुसारं त्रिवृद् वै शिल्पं नृत्यं गीतं वादितमिति भावाभिनयो नृत्यम्। केवलमङ्गसञ्चालनं नृत्तं भवति। नृत्यसमये किंवा नृत्येन साकं हास्यमुद्रा आवश्यकी भवति। नृत्ये सौन्दर्यप्रदर्शनं गात्राणां निःसंकोचप्रसारणं भावाभि व्यक्ति श्चापि प्रधानतां भजन्ते। नृत्यैर्वात्या चक्रमिवाभिनयः क्रियते स्म। तस्मिन् समये बहूनि रूपाण्यासन्। यथा- रज्जुनृत्यं, सलिलनृत्यं, अरुणनृत्यं, प्रकृतिनृत्यं, पुष्पनृत्यं, वसन्तनृत्यमिति। नर्तकेभ्यः नृतुशब्दः प्रयुज्यतेस्म। त्रिविधं गीतं ऋगाश्रितं, स्तोभाश्रितम्, उभयाश्रितं चेति। अनेन प्रमाणी भवति यद् सामगानस्य प्रक्रियाक्लिष्टा आसीत्। सामान्यतः सम्पूर्ण सामगानं भागद्वयेन विभक्तं-पूर्वगानमुत्तरगानञ्च।

# सङ्गीतस्योपजीव्यत्त्वम्

ईश्वर अंश जीव अविनाशी चेतन अमल सहज सुखराशि’ अस्यां पृथिव्यां मानवाः भावाभिव्यक्तयेध्वनेः प्रयोगम् अकुर्वन्। क्रमेण स एव ध्वनिः नादशब्देन व्यवहृतः। स एव नादः शब्दरूपेण परिणतो भूत्वा अर्थं गृह्णाति। तदा शब्दार्थौ सम्मेल्य कवयः वाग्व्यवहारं कृतवन्तः। पुनश्च अयमेव वाग्व्यवहारः भाषाकाव्यसाहित्यसङ्गीतमाध्यमेन मनुष्याणां मनोरञ्जयति। अयमेव मानवसंस्कृतेः उपादानमस्ति। नद्यते इति नादः। न-कारशब्देन प्राणसंज्ञकः द-कारशब्देन अग्निसंज्ञकः स्वर इति अवबोध्यते। प्राणाग्नयोः समुत्भूत एष नादः। आहतानाहतभेदाभ्यां नादः द्विविधः। आहतनादः सङ्गीतस्य व्युत्पत्तिकारकः। पुरातत्त्वानुसारेण सङ्गीतकलाया उद्भवः स्वयम्भूः परमेश्वरात् अभवत्। नटराजशिवो नृत्यकलायाः आदिस्रोतः। भगवती सरस्वती गीतवाद्यकलयोः स्रष्ट्री, यद्यपि नाट्यशास्त्रानुसारेण ब्रह्मैव सङ्गीतकलायाः जनकः वर्तते। केचन जनाः वदन्ति यत् पशुपक्षिणां ध्वनिभ्यः सङ्गीतोत्पत्तिः। यथा कोहलाचार्येण उक्तम् -

षड़जं वदति मयूर ऋषभं चातको वदेत्।
अजा वदति गान्धारं क्रौञ्चो वदति मध्यमम्।।
पुष्पसाधारणे काले कोकिलः पञ्चमो वदेत्।
पावृट्काले तु सम्प्राप्ते धैवतं दर्दुरो वदते।
सर्वदा च तथा देवि निषादं वदेत् गजः।।

धनुष्टङ्कारं वंशवृक्षशब्दम् च श्रुत्वा वीणातः प्रेरणा जागरिता भवति। नाट्यशास्त्रानुसारेण मृदङ्गवादनस्य कल्पना प्रस्तर खण्डोपरि जलविन्दुनिपातनात् एव समभवत्।

सङ्गीतसाहित्ये सङ्गीतस्य प्रयोग उपयोगश्च संस्कृतसाहित्ये सङ्गीतस्य प्रशंसा बहुभिः कविभिः कृता। गीतवाद्ययोः सर्वश्रेष्ठं निदर्शनमुपलभ्यते मेघदूतस्य पद्ये- उत्सङ्गे वा मलिनवसने सौम्य! निक्षिप्य वीणां, मद्गोत्राङ्कं विरचितपदं गेयमुद्गातुकामा। तन्त्रीमाद्रां नयनसलिलै सारयित्वा कथञ्चिद, भूयोभूयः स्वयमपि कृतां मूर्च्छानां विस्मरन्ती। मेघदूतपद्यमिद्यं सङ्गीतदिशा महत्त्वपूर्णमस्ति। अस्मिन् गानं वादनं चोल्लिखितम्। विरहविनोदन स्यानेकोपायेषु गानमपि परिगणितम्। विरहविनोद नोपायानुल्लिखं भरतसेन (शेषान्मासान् इति पद्यस्य भरतसेनकृतसुबोधाटीकायामुदधृतम्) लिखति -

देवता पूजनं कुर्यात् कुर्याद्वा निभृते बलिम्।
लिखेत कान्तप्रतिकृतिं पाठ्येच्छुकसारिकाम्।
वादयेच्च तथा वीणां गायेद् गीतं तदङ्कितम्।
एवंविधैविनोदैश्च रमणेन विनावला।
विनयेच्च व्यथां तीव्रं सङ्गमाशावलम्वनात्।।यक्षानुमानतः

यक्षिणी वीणावादनेन सह गानं विधास्यति। पद्येऽस्मिन् वीणा, पदम्, गेयम्, उदगातुकामा, तन्त्री,सारयित्वा, मूर्च्छना च सङ्गीतशास्त्रस्य पारिभाषिकाः शब्दाः सन्ति। मेघदूतस्य प्रायः सप्तत्रिंशत्स्थलेषु, गानस्य वादनस्य, नृत्यस्य चोल्लेखाः समुपलभ्यन्ते। गाने गेयं किञ्चिदपि पद्यं सङ्गीतस्य सप्तस्वरैराबद्धं गीयते। मेघदूते गानस्य सुमनोहरा अनेके प्रसङ्गाः सन्ति। विभिन्नैः वाद्यैरुद्भूतस्य स्वरस्य लयस्य चानन्दः वाद्यसङ्गीतेन वादनेन वा प्राप्यते। कविकृतं वर्णनमिदं तस्य सङ्गीतविषयकं परमं वैदुष्यं पुष्णाति। पञ्चतन्त्रे श्रृङ्गालः गर्दभं तिरष्कर्तुं वदति यत् भवान् गीतरसशून्यमस्ति इति। तदा गर्दभेन उक्तम्-‘किमहं नजानामि गीतम्’? तद्यथा तस्य भेदाः श्रृणुः -

सप्त स्वरास्त्रयो ग्रामा मूर्छनाश्चैकविंशतिः।
तानास्त्येकोनपञ्चाशत्तिस्रो मात्रा लयस्त्रयः।।
स्थानत्रयं यतीनां च षडास्यानि रसा नव।
रागाः षट्त्रिंशतिर्भावाश्चत्वारिंशत्ततः स्मृताः।।
पञ्चाशीत्यधिकं ह्येतद्गीताङ्गानां शतं स्मृतम्।
स्वयमेवं पुरा प्रोक्तं भरतेन श्रुतेः परम्।।

अत्र सङ्गीतस्य यत् भावः प्रकाश्यते तेन सङ्गीतभावनाया प्रतिफलनं संघट्यते। रामायणस्य किष्किन्धाकाण्डे महाकविना वाल्मीकिना उल्लिखितं यत् - षट्पादतन्त्री मधुराभिधारं प्लवंगमोदीरितकण्ठतालम्। आविष्कृतं मेघमृदङ्गनादैः वनेषु संगीतमिव प्रवृत्तम्।। क्वचित् प्रनृतैः क्वचिदुन्नदद्भिः क्वचिच्च वृक्षाग्रनिषण्णाकायैः। व्यालम्ववर्हाभरणैर्मयूरैर्वनेषु सङ्गीतमिव प्रवृत्तम्। अर्थात् ‘षट्पदो भ्रमरस्तद्ध्वनिरूपं तन्त्रीणां मधुरमभिधानं गीतं यस्मिन्। प्लवंगमानां भेकानामुदीरितः कण्ठतालः सूत्रधारमुखशब्दतालो यस्मिन्। मेघशब्दो एव मृदङ्गनादास्तैराविष्कृतं प्रकटितं सङ्गीतं वनेषु प्रवृत्तमिव। प्रवृत्तैरारब्धनृत्यैः। उन्नदन्तो गायकास्तैः। वृक्षाग्रनिषन्नकायास्ते सङ्गीतोपलक्षितनृत्यद्रष्टारः - अत्र सङ्गीतस्य आभिधानकार्थः अभिव्यञ्जितः। वाल्मीकिरामायणस्यायोध्याकाण्डे सीता कथयति - नातन्त्री वाद्यते वीणा ना चक्रो विद्यते रथः। नापतिः सुखमेधेत या स्यादपि शतात्मजा।।13 वीणावर्णनप्रसङ्गे कवयः तस्यास्तन्त्रीणां वा वर्णनमवश्यं कुर्वन्ति। मेघदूतस्य नायिका यक्षिणी कुशला सङ्गीतज्ञास्तिवीणावादनेन च स्व विरहं विनोदयति। सा वीणां स्वकीयोत्सङ्गे निधाय तस्याः वादनेन प्रियविरहसम्बद्धं स्वनिबद्धं गीतमुच्चस्वरेण गातुं समुत्सुका। मृच्छकटिकप्रकरणे नायकः चारुदत्तः रेभिलस्य गीतं श्रुत्वा कथयति - ‘वयस्य सुष्ठ खल्वद्य गीतं भाव रेभिलेन। रक्तञ्च (मधुरः कण्ठध्वनिः) नाम मधुरञ्च समं स्फुटञ्च भावान्वितञ्च ललितञ्च मनोहरञ्च।’ - अनेन प्रतीयते यत् शूद्रककाले सङ्गीतस्य परम्परा विकसिता। शूद्रककालीनगायको अपि रक्तेन सुपरिचिताः आसन्।

**प्रेरणाश्रोत**

**जगदगुरू शंकराचार्य ज्योतिष्पीठ काशी पीठाधीश्वर ब्र.ली. स्वामी विद्यानंद सरस्वती जी महराज (मौनी जी), शाश्वतानन्द सरस्वती जी महाराज।**

**संरक्षक मण्डल**

**योग गुरू स्वामी आनन्द गिरि जी**
(बांध स्थित बड़े हनुमान जी )

**डॉ भगवत् शरण शुक्ल**
**प्रोफेसर**-व्याकरण विभाग-संस्कृतविद्या धर्मविज्ञान संकाय
काशी हिन्दू विश्वविद्यालय वाराणसी

**प्रमोद बंसल**
निदेशक-महारानी चाय, प्रयागराज

**सलाहकार**

**श्रीमती अनामिका चौधरी**
(सदस्य राज्य महिला आयोग)
**डा. पुष्पा पाल** (एमजीएम हास्पिटल)
**- सुनील सराफ**
(अवतार केमिस्ट)
**-पं. देवेन्द्र प्रसाद त्रिपाठी**
**-एसो. प्रो. डॉ. मुरली मनोहर द्विवेदी**
**-डॉ. शम्भुनाथ त्रिपाठी** (अंशुल)
**-डा. मोरार जी त्रिपाठी**
**-आचार्य कुशलदेव**
( प्रवक्ता गुरुकुल महाविद्यालय ततारपुर हापुड़।)
**-महेश जी कपूर**
**डा.** कृष्णानन्द पाण्डेय
**फादर** - थॉमस कुमार
**उपसम्पादक** - विनम्र शुक्ल
**विशेषवार्ताहरः**
डॉ प्रदीप्त कुमार नंदः

**प्रयागराज ( इलाहाबाद )**

**RNI No. : UPSAN/2018/76680**

स्वामी मुद्रकः प्रकाशकश्च **आनन्द नारायण शुक्ल** द्वारा रमा प्रिन्टिग प्रेस, 53/25/1,ए बेली रोड, नया कटरा, प्रयागराज से मुद्रित एवं 1286बी/541बी नेहरू नगर मीरापुर, प्रयागराज से प्रकाशित।

मो.-9415633297

**संपादक-राकेश शर्मा**